योगवत् पूवकौ तूक्तौ तद्वदेव तृतीयक ।
हेतुमात्रविभागोत्थो हेत्वहेतुविभागज ॥१०६॥

इति द्वेधाऽन्तिम प्रागवदाद्यस्त तोर्विभागत ।
त त्वन्तरात तदाऽऽकाशदेशतो भाग[१] इरित ॥१०७॥

नाशस्तूत्तरसयोगाश्रयनाशत इष्यते ।
पराऽपरधियोर्हेतू परताऽपरते मते ॥१०८॥

तनुयोगाल्पभूयस्त्वनिमित्ताऽस्नु परादिधी ।
द्रष्टरि व्यभिचारित्वान्नैतद्युक्त द्विधा च ते ॥१०९॥

दिक्काला[१]क्कृततातस्तन्नाश सप्तविधो मत ।
हेतु[२]त्रयस्य प्रत्येक युगपच्च विनाशत ॥११०॥

द्रव्यापेक्षाधियोर्नाशात समवाय्य[१]ययोस्तथा ।
निमित्तासमवायिस्थ[२]नाशाश्चेत्येष सग्रह ॥१११॥

कार्य यदाश्रय तत्स्यात समवायीतरत्पुन ।
तत्प्रत्यासत्तिभाक् सा च द्वेधैका हेतुसयुजे ॥११२॥

स्वकार्येण सहकस्मिन्नऽर्थे वृत्ति परा पुन ।
हेतु[१]रूपस्य तत्का[२]यकारणे[३]न सह स्थिति ॥११३॥

एकस्मिन्निति सप्रोक्त ताभ्याम यन्निमित्तकम ।
परताऽपरते प्रोक्ते धिषणा प्रोच्यतेऽधुना ॥११४॥

बुद्धिर्ज्ञान प्रमाण तु स्यादनुव्यवसायधी ।
जानामीति द्विधा सा च नित्यानित्यविभेदत ॥११५॥

(१०३) १ एकाथसमवेतादित्यथ ।
(१०७) १ द्वितत कपटदश्यविशिष्टाकाशात ।
(११०) १ दिक्कालक्कृतत्वनत्यथ ।
२ समवायादिकारणत्रयस्य ।

(१११) १ असमवायिनो ।
२ तन्तरूपस्य ।
(११३) १ तच्छ देन हेतरूप तस्य तत्कायपटनिष्ठ रूप तस्य कारणन पटन ।

नित्येश्वरगता तस्यानित्यता चामुतो[1] मता ।
घटोऽयमेतज्जनकानित्यज्ञानान्यबुद्धित ॥११६॥
जन्य कार्यत्वतो यद्वत पटादिरिति मानत[1] ।
अनित्या जीवसस्था[2] स्याद बुद्धि सा द्विविधा मता ॥११७॥
विद्याऽविद्या च तत्रान्त्या चतुर्द्धा समुदीरिता ।
सशीतिपर्ययस्वप्नानवसायविभेदत ॥११८॥
सशयोऽनेकपक्षाणामवसायो[1] विकल्पत ।
स्थाणु स्यात्पुरुषो वेति स्याद यत्रा यशेमुषी ॥११९॥
विपर्ययो यथा रज्जौ सर्पधीनन्[1] दर्शनात् ।
स्मतेर्भेदाग्रहादेव व्यवहारो न तच्छुभम ॥१२०॥
वस्तुस्वरूपभेदस्य वस्तुनोग्रहणे कथम् ।
अग्रहो गुरु[1]राद्धा ते भवे नाप्यसत[2] प्रथा[3] ॥१२१॥
रज्जावहेर्वियत्पुष्प न हि क्वापि प्रतीयते ।
नासत्ख्यातिरतो नाऽऽत्मख्यातिर[1]प्यत्र चातुरीम ॥१२२॥
धत्ते यद्यपि विज्ञानाकार आशीविषो मत ।
बाह्यस्थ त्वान्तर नव नाप्यऽनिर्वचनीयता[1] ॥१२३॥
असत्सदुभयान्यस्मि नर्थे मानस्य हानित ।
अतो[1] वल्मीकदष्टोऽही रज्जावाभाति दोषत ॥१२४॥

(११६) १ वक्ष्यमाणात् प्रमाणात ।
(११७) १ प्रमाणात २ निष्ठा ।
(११९) १ कोटिद्वयस्य ।
(१२०) १ अख्यातिवादी प्रभाकर आपपति ।
(१२१) १ प्रभाकर ।
२ असतख्यातिवादिन बौद्ध मिर्रोचष्ट ।
३ ज्ञानम ।
(१२२) १ आत्मख्यातिवादी च बाद्धभद ।
(१२३) १ अनिर्वचनीयख्यातिवादिनो वदान्तिन ।
(१२४) १ अ यथार्थख्यातिवादी तार्किक परिहरति ।

इति चारु वचो युक्त सिद्ध स्वप्नस्तु लोकत ।
स्यादनध्यवसायो न कि सज्ञो वृक्ष इत्ययम ॥१२५॥
विद्याऽपि स्याच्चतुर्भेदा प्रत्यक्षमनुमानकम ।
स्मृतिरार्षमिति प्राहुरपरोक्षा यथार्थधी ॥१२६॥
प्रत्यक्ष द्विविध तच्च योग्यऽयोगिविभागत ।
धर्मोऽध्यक्ष[1] प्रमेयत्वात् केषांचित्स्याद् घटादिवत् ॥२७॥
योगिसिद्धिरिति द्वेधे[1]तरदाद्यमकल्पकम्[2] ।
निर्विशेषा[1]र्थधीरन्यत सविकल्पकमीरितम ॥१२८॥
शब्दोल्ले[1]खभव तत्र[2] षोढा सबन्धमूचिरे ।
जनक ज्ञा[3]तशीषण्या अत्रैषा प्रक्रियोच्यते ॥१२९॥
योगाद् द्रव्यग्रहो युक्तसमवायाद गुणादिधी ।
सयुक्तसमवेतस्थसमवायाद गुणत्वधी ॥१३०॥
शब्दधी समवायात स्याच्छब्दता समवेतगात् ।
समवायात प्रतीयेत विशेषणविशेष्यता ॥१३१॥
एतत्सब ध्वन्निष्ठाभावधीहेतुरिष्यते ।
अविनाभा[1]वज ज्ञानमनुमान प्रचक्षते[2] ॥१३२॥
दृष्टसामान्यतो दृष्टभेदाद् द्वेधा तदीरितम ।
दृष्टमध्यक्षयोग्यार्थग्राहि धूमाद यथाग्निधी ॥१३३॥
स्वभावविप्रकृष्टार्थभासक चेतरद यथा ।
चक्षुर्वी रूपधीतस्तत परार्थस्वार्थभेदत ॥१३४॥

(१२७) १ प्रत्यक्ष ।
(१२८) १ अयोगिप्रत्यक्ष निर्विकल्प सविकल्पकभेदेन द्विधा भवतीति। २ निर्विकल्पम्। ३ विशेषरहितार्थधी ।
(१२९) १ उच्चार २ सविकल्पक ३ तर्कविद ।
(१३२) १ अविनाभावोपेतधूमज ज्ञानम २ कवलीकारा ।

पुनर्द्विधोपदेशेन हीनम[1]न्त्यमथाऽग्रिमम[2] ।
तद्युक्त स च पञ्चाश वाक्यमिष्ट प्रतिज्ञया ॥१३५॥
सह हेतु सदृष्टान्ते उपनी[1]त्युपसहृती ।
इत्यशा पक्षधागाद्या सिसाधयिषया यथा ॥१३६॥
अग्निमान् गिरिरित्यन्यो धूमवत्त्वादितीदृश ।
साधनव्यापका लिङ्गधागिष्ट स त्रिधा मत ॥१३७॥
अन्वयव्यतिरेकी च व्यतिरेक्य न्वयी तथा ।
पञ्चरूपो भवेदाद्य पक्षधमत्वमादिमम ॥१३८॥
रूपसत्त्व सपक्षेऽन्यद् विपक्षापे[1]तताऽपरम ।
अबाध्यता तु प्रत्यर्थिपक्षता चेति पञ्चमम ॥१३९॥
स्याद व्याप्यवृत्तिता हेतो पक्ष आद्य द्वितीयकम ।
सपक्षेऽल्पे समग्रे वा वत्तिर्व्यावृत्तिरिष्यते ॥१४०॥
विपक्षात्सकलादन्यच्चतुर्थ त्वविरोधिनि ।
प्रामाण्येन प्रतिज्ञासे (स्ये) साध्यतद्विपरीतयो ॥१४१॥
साधनस्य त्रिरूपत्व पञ्चम रूपमीरितम ।
विपक्षे बाधकस्तर्कोऽप्यऽनुमानाङ्गमिष्यते ॥१४२॥
उपाधेर्घातकत्वेन व्यभि[1]चारस्य चाध्रुवम् ।
साधना[2]व्यापक साध्य समव्याप्ति समीरित ॥१४३॥
उपाधिरग्नी[1]षोमीयहिसाऽधमत्वसाधने ।

(१३५) १ स्वाथ २ पराथ ।
(१३६) १ उपनयनिगमने ।
(१३९) १ विवत्तता २ असत्प्रति क्षता ।
(१४३) १ अनकातिकस्य ।
२ साधनाव्यापकउपाधिरित्युक्त अनित्य शद कृतकत्वादित्यत्र सावयवत्व उपाधि स्यात । तदथ साध्यसम याप्तिरिति पदम । साध्यसम याप्तिरुपाधिरित्युक्ते तस्मिन्नेवानुमाने कार्यत्वमप्युपाधि स्यात । तदथमुक्त साधना व्यापकपदम । तद यत्वोपाधि यदासाथ पमसदम ॥
(१४४) १ वैधी हिसा ।

हिसा हेतोर्निषिद्धत्वमुपाधिर्यादृगिष्यते ॥१४४॥
तर्को युक्तिरिह प्रोक्तस्तर्कतत्त्वविचक्षणै ।
यथा यद्यग्न्यभाव स्याद धूमाभावोऽपि ते भवेत् ॥१४५॥
इत्येकादशधा चासावन्तर्वाणिभिरीरित ।
क्षितितोयादिजन्य स्यात कर्ता कायत्वहेतुत ॥१४६॥
यथा घटादिनन्वस्तु कार्यता कर्तृजन्यता ।
माऽस्तु को बाधकस्तर्क इति षष्टेऽभिधीयते ॥१४७॥
व्याघातात्माश्रयान्योन्याश्रयता चक्रकास्थिती ।
प्रतिबदी च कल्पनालाघव गौरव तथा ॥१४८॥
उत्सर्गश्चापवादश्च वैयर्थ्य चान्तिम मतम ।
अकर्तृताकायतयोर्व्याघात स्यात समुच्चये ॥१४९॥
हिमाग्न्योरिव नन्वस्तु तत्र नात्रेतिचेद् वद ।
किं विशेषोऽस्ति नो वाऽत्र नास्ति चेन्मूकता व्रज ॥१५०॥
यद्यस्ति किं स एव स्यान्मानमात्मन्युतान्यक ।
स चेदाऽऽत्माश्रयत्व स्यादन्यश्चेत्तत्र किं भवेत ॥१५१॥
पूर्वो मान तृतीयो वा पूर्वश्चेत स्याद ध्रुव तदा ।
अन्योन्याश्रयताऽथ स्यात तृतीयश्चक्रक भवेत ॥१५२॥
तृतीये तु चतुर्थश्चेदनवस्थवमासजेत ।
चतुर्थस्तु प्रमाण चेदाद्य किं नवमीदशी ॥१५३॥
प्रतिबदीत्यकर्तृत्वे कायतव न सेत्स्यति ।
सिद्धोऽत इश एकश्च कल्पनालाघवाद भवेत ॥१५४॥

(१४६) १ शास्त्रविदभि ।
(१४८) १ चक्रकाश्रयानवस्थे । २ कल्पनालाघवम ३ कल्पना गौरवम् ।
(१४९) १ शरीरेषु अपवादित्वात अपवादस्तर्क तदपतत्वान ।
(१५०) १ तत्र हिमाग्न्योर्विषयव्याघातोऽस्तु ।
(१५१) १ तस्मिन विषये ।

कल्पनागौरव तु स्याद् बहुताया परेशितु ।
नन्वदेहस्य कतृत्वमेव नास्ति जगत्कृति ॥१५५॥
कुत स्यादिति चेत पश्य कतृत्व चेतनत्वत ।
उत्सर्गात् सभवेत् कि न निश्चयोऽस्तीति चेच्छृणु ॥१५६॥
मुक्तात्मस्वपवादित्वादस्तु मान परेश्वरे ।
तन्माने कि प्रमाण स्यादिति चे मौनमुत्तरम ॥१५७॥
वयात्यसज्ञ नह्यस्य प्रश्नस्यान्तोऽवसीयते[१] ।
इत्थ तर्कास्तर्कदोषा[२] सप्रोक्तास्तर्ककर्कशै ॥१५८॥
आपाद्या सिद्धिराद्य स्याद यथा कर्त्ता यदीश्वर ।
रागी स्यादित्यसिद्धिश्चापादकस्य द्वितीयक ॥१५९॥
यथा यदीशो देही[१] स्यात कर्त्ता स्यात् तदितीदृश ।
उभयाऽसिद्धता यादृक देहीशश्चेत तदा भवेत् ॥१६०॥
धर्म्मादिभागिति प्रोक्तो मूलशैथिल्यमुत्तर ।
यथा यदीश कर्त्ता स्याद् विप्र स्यात् तह्यऽसाविति ॥१६१॥
मिथस्तर्कविरोधस्तु पञ्चमो यद्वदीश्वर ।
कर्त्ता यदि भवेद् रागी तर्हिस्यादित्युदाहृते[१] ॥१६२॥
कर्त्ता चेन्न भवेत तर्हि जगदाऽऽकस्मिक भवेत् ।
तर्कद्वयविरोधोऽयमिष्टापत्ति पुन पुन ॥१६३॥
यथा यदीश्वर कर्त्ता स्यात तर्हि ज्ञानवानिति ।
इश्वरश्चेतनश्चेत्स्यादनित्यज्ञानवान् भवेत ॥१६४॥

(१५६) १ सामा यविषे ।
(१५८) १ ज्ञान न प्राप्त । २ आपाद्या द्व १ आपादका सिद्धिः। २ उभया द्व । ३ मूलशथिल्य। ४ तर्कविरोध । ५ इष्टापत्ति । ६ विपर्ययापर्यवसानि ७ इति सप्त तर्का ।
(१६०) १ देहित्वमापादकम् ।
(१६२) १ इत्युक्ते ।

तथा तु न भवत्येव, तस्मान्नो चेतनोऽप्यसौ।
इति वक्तुमशक्यत्वादित्यऽपर्यवसायिता ॥१६५॥
विपर्ययस्य दोषोऽयमुक्तस्तर्कस्य सप्तम ।
सोऽय तर्कोऽनुमानाङ्गमित्यल बहुनाऽमुना ॥१६६॥
पक्षव्यापी सपक्षस्थोऽविद्यमानविपक्षक ।
स्यात्केवलान्वयी प्रोक्त स च योगिप्रसाधने ॥१६७॥
पक्षव्यापी सपक्षेण हीनोऽपतो विपक्षत ।
केवलव्यतिरेकी स्याद् यथा कार्यमशेषकम ॥१६८॥
सर्ववित्कतृजन्य स्यात् कादाचित्कत्वतो नयत्।
एव तदेव नव स्याद् यथाकार्यमितीदशम ॥१६९॥
हेतुरन्यत्वत सर्वो हेत्वाभास स षड्विध ।
असिद्धश्च विरुद्धश्च स्यादनकान्तिकस्तथा ॥१७०॥
अनध्यवसित कालातीत प्रकरणे सम ।
पक्षेऽनिश्चितवृत्ति स्यादाऽऽद्यो यादृगनित्यक ॥१७१॥
चाक्षुषत्वेन शब्द स्यादिति पक्षविपक्षग ।
विरुद्धो नित्यक शब्द कार्यत्वादितिवत्पर ॥१७२॥
पक्षत्रयस्थो यद्वत्स्यात प्रमेयत्वादनित्यक ।
शब्द इत्यपरो हीनसपक्षकविपक्षक ॥१७३॥
पक्षव्यापी यथा सवमनित्य सत्त्वतो मतम् ॥
प्रमाणबाधिते पक्षे वर्त्तमान उदीरित ॥१७४॥
कालातीतो यथाऽनुष्ण पदार्थत्वाद् हुताशन ।

(१६७) १ धर्म्म कस्यचित्प्रत्यक्ष प्रमय त्वात घटादिवत।

(१६८) १ यावृतत्त ।

(१७०) १ पूर्वोक्तलक्षणकृता द्व तु त्रयात।

(१७१) १ यथा।

स्वपक्षे परपक्षे च त्रिरूपोऽन्त्य समीरित ॥१७५॥
सपक्षपक्षयोरन्यतरत्वात् स्यादनित्यक ।
शब्द इत्यादिवत्तेषा भेदा सन्ति सहस्रश ॥१७६॥
सम्यगदृष्टान्तवागिष्टमुदाहरणमत्र च ।
साधर्म्य वैधर्म्यभिदा[1] द्विविध्य सप्रतीयते ॥१७७॥
यद्यद् धूमवदग्न्याढ्य तत्तद्यद्वन्महानसम ।
इत्याद्य न यदेव स्यान्न तदेव यथा ह्रद ॥१७८॥




इत्यन्त्यमेतदाभासा[1] मनो मूर्तत्वत क्षयि ।
अणुवत् कमवद व्योमव नृशृगवदित्यऽमी ॥१७९॥
स्यु साध्यसाधनद्वन्द्वाश्रयशून्या[1] परौ पुन ।
वागदोषो व्याप्त्यनुक्ति स्यादेको घटवदित्ययम् ॥१८०॥
व्याप्तेर्विपर्ययोक्ति स्यादपरो यदनित्यकम् ।
तन्मूत दृष्टमित्येव वैधर्म्येऽप्यूह्यमीदृशम्[1] ॥१८१॥
दृष्टान्तस्योपमानेन पक्षे व्याप्त्यभिधायि यत् ।
वचन सोपनीति स्यात् सा द्वेधा सप्रकीर्तिता ॥१८२॥
उदाहरणवद धूमवाश्चायमिति साऽऽदिमा ।
अधूमवान् गिरिर्नेति द्वितीयोक्ता विशारदै ॥१८३॥
सहेतुका प्रतिज्ञाया वाक स्यान्निगमनाऽभिधा ।
अतोऽग्निमाने च गिरिरित्युक्तमनुमानकम् ॥१८४॥
अन्तर्भावोऽनुमाने स्याच्छब्दस्य ज्ञातसगति ।
यत प्रत्याययत्यऽथ[2] शब्दो नाज्ञातसगति ॥१८५॥

(१७७) १ भदन ।
(१७९) १ उदाहरणाभासा ।
(१८०) विकला ।
(१८१) १ एवमेव साधनाव्यावृत्त साध्याव्यावृत्त उभयाव्यावृत्त आश्रयविकल । वाग्दोषद्वयोपेत चोदाहरणम । पूर्वानिमान दृष्टान्तेष्वेव क्रमेण ऊह्यम।

उपमान[1] तु गोतुल्यो गवय स्यादितीदशम ।
तच्च शब्दो वने दृष्टे[2] गवयेऽनेन तुल्यका ॥१८६॥
मद्गौरित्युपमान चे नैतदेवा स्मतियत ।
श्रुतातिदेशवाक्यस्य[1] वने[2] या गवये[3] मति ॥१८७॥
न सोपमानमध्यक्षमेव तत् सविकल्पकम ।
बहिर्भावाऽविनाभूतो गृहेऽभावोऽवधारित ॥१८८॥
जीवतोऽतोऽनुमान स्यादर्थापत्तिरपि ध्रुवम् ।
सभवेदयुत[1] लक्ष इत्यय[2] सभवोऽपि न ॥१८९॥
अनुमान यतो लक्षेऽयुतव्याप्ति प्रतीयते ।
ग्राह्य प्रत्यक्षतोऽभावो नातोऽभावप्रमाणता ॥१९०॥
अज्ञातकर्तृक वादपारपर्यमुदाहृतम् ।
ऐतिह्य तच्च शब्देऽन्तर्भूतमित्यनुमानकम् ॥१९१॥
प्रत्यक्षमिति माने द्वे कणादेनोपवर्ण्णिते ।
प्रामाण्य च तयोर्नैव स्वत[1]स्तन्मान[2]हानित ॥१९२॥
धीहेतुमात्रजन्यस्थ प्रामाण्य द्वित्ववद भवेत् ।
दोषोऽनुत्पाद्यमानत्वे सति ज्ञानाश्रयत्वत ॥१९३॥
इति चेदप्रमाणत्वेऽप्येव वक्तु प्रशक्यते ।
तस्मात्[1] प्रमाण धीहेतु[2]व्यतिरिक्तात्महेतुकम् ॥१९४॥

(१८५) १ ज्ञातसबध आगम । अनुमानमपि ज्ञातसबधमवाथ ज्ञापयति ।
२ ज्ञापयति ।
(१८६) १ चिरतन नयायिकाभिमतमुपमान शब्द अन्तर्भावयति । २ मीमासकाभिमतमुपमानमाशङ्कते ।
(१८७) १ श्रुत अतिदशवाक्य गोसदशो गवय इति वाक्य येन स तस्य ।
२ इदानीतननयायिकाभिमतमपमान प्रत्यक्ष अन्तर्भावयति ।
३ अय गवय इति मति ।
(१८९) १ दशसहस्र नाम । २ वनक्षु विषये(?) ।
(१९२) १ स्वतस्त्वप्रमाणाभावात्
२ स्वत प्रामाण्यवादिनो मीमासकान्निराचष्टे ।

धीविशेषत्वतो यादगमानमिति सुन्दरम् ।
अबाध्या[1]ऽनवबुद्धार्थबोधकत्वं[2] प्रमाणता ॥१९५॥
तच्च वस्तुस्वभाव स्यान्न शक्ति[1]र्मानहानित ।
[2]दाहस्फोटादिकार्याणामन्यथाऽनुपपत्तिता ॥१९६॥
शक्ति स्यादिति चेन्नैव कार्यमग्नेर्भविष्यति ।
कि शक्त्या ननु मन्त्रादौ सति कार्य न दृश्यते ॥१९७॥
सत्यप्यग्नौ न मन्त्राद्यभावेनान्वितवह्निना ।
कार्यसिद्धेरत शक्तिर्नाङ्गीकार्येति सग्रह ॥१९८॥
ज्ञान सस्कारमात्रोत्थ स्मृति सा[1] चाप्रमा[2] मता ।
स[1]शयादिवदध्यक्षानुमानान्यत्वतस्तथा ॥१९९॥
इच्छा द्वेषाऽनुमानादि कार्यमस्या प्रकीर्त्तितम् ।
आर्षं तु प्रातिभ ज्ञान मुनीना तपसेरितम् ॥२००॥
बालाना च यथा कन्या ब्रूते प्रात पिता मम ।
आयास्यति मनो मेऽत्र प्रमाणमिति वर्णिता[1] ॥२०१॥
बुद्धि सविभवा[1] सम्यग व्याख्यास्यामोऽधुना सुखम् ।
निरुपाधिय इच्छाया विषयस्तत् सुख मतम् ॥२०२॥
धर्मो हेतुमनो मान कार्य माऽऽस्यप्रसन्नता ।
द्वेषस्य गोचरो दु ख निरुपाधिनिमित्तकम् ॥२०३॥
अधर्मोऽत्र मनो मान कार्यमास्यविषण्णता ।

(१९४) १ स्यमतमपसहरति—परत माणवादी तस्मादिति । २ धियो हेतव न्निकर्षा य धीहेत यतिरिक्तब ध्य यवहार क्षणहेतुकत्वदृष्टा त ज्ञात यम । पक्षे च–धी तुव्यतिरिक्ता बाध्य यवहारस्वरूपहेतकत्व ात यम ।

(१९५) १ अज्ञाताथ ।
२ बोधकत्व प्रमाणस्वरूपमिति तार्जिका ।

(१९६) १ बोधकत्व पथक पदाथशक्ति-रिति मीमासका ।
२ दाहस्फाटादिकार्याणि शक्तिम तरण नपपद्यमानानि वह्नौ शक्ति गमयन्ति । इत्यर्थापत्ति प्रमाणम ।

(१९९) १ पक्ष । २ साध्यम । ३ दष्टान्त । ४ साधनम् ।

(२०२) १ सविस्तरा ।

इच्छा स्यात् प्रार्थना सा च द्वेधा नित्यादिभेदत ॥२०४॥
नित्यशी जीवगाऽनित्या कार्य चास्या प्रयत्नक ।
रोषो द्वेषो भवेत् कार्यमस्य प्रोक्त निवर्त्तनम् ॥२०५॥
द्रोहक्रोधादयो भेदा द्वेषस्यैव समीरिता ।
उद्योग[1] स्यात प्रयत्नोऽसौ द्वेधा नित्यादिभेदत ॥२०६॥
नित्य ऐश परो जैव सोऽपि द्वेधाऽग्रिमस्तु न ।
इच्छादि[1]पूर्वकोऽन्याऽपि प्राणधारणपूर्व[2]क ॥२०७॥
मान च तत्र स्वप्नतोऽसुक्रिया[1] यत्नहेतुका ।
प्राणक्रियात्वतो जाग्रदसुचेष्टावदिष्यताम् ॥२०८॥
गुरुत्वमाद्यपातैका हेतु स्यात् परिशेषत ।
पार्थिवाऽऽप्याणुग नित्य कार्यग हेतुपूर्वकम् ॥२०९॥
नित्याऽनुमेयमध्यक्ष हेतुनाशाच्च नश्यति ।
द्रवत्व स्यन्दने हेतु स्याद् भूमिजलवह्निगम् ॥२१०॥
जले सासिद्धिक भूमितेजसोरग्नियोगजम् ।
[1]जत्वादावग्निसयोगाश्रयनाशाच्च नश्यति ॥२११॥
स्नेहधीविषयस्नेहो जलकनिलयो मत ।
नित्यताऽनित्यतोत्पत्तिव्यवस्था तु गुरुत्ववत ॥२१२॥
सस्कारस्त्रिविधो वेगस्थितस्थापकभावना ।
तत्र वेगो महीतोयवह्निवायुमनोभव ॥२१३॥
स द्वेधोक्त क्रियावेगजत्वेनाद्य शिरादिषु ।
जलेऽन्य स्पर्शवद् द्रव्ययोगनाशी समीरित ॥२१४॥

(२०६) १ उद्यम ।
(२०७) इच्छान्दिलिङ्गक । २ प्राणचेष्टालिगकम्य ।
(२०८) १ प्राणचेष्टा ।
(२११) १ लाक्षादौ ।

प्रागवस्थाऽन्यधीभूतस्वाश्रयप्रागवस्थिते ।
सपादको गुणोऽभीष्ट स्थितस्थापकसज्ञित ॥२१५॥
नित्यताऽनित्यतोत्पत्तिप्रक्रिया तु गुरुत्ववत ।
गुणोऽसाधारण पुसो भावना स्मतिकारणम् ॥२१६॥
पटवभ्यासादरज्ञानजन्यो नित्यानुमेयक ।
अतीन्द्रियौ गुणौ पुसो धर्म्माधर्माबुदाहृतौ ॥२१७॥
पुत्राद्यभ्युदये हेतुधर्मो नि श्रेयसे तथा ।
कैवल्यसज्ञे दु खैकहेतुधर्मेतरो मत ॥२१८॥
द्रव्यादेधर्म्मता ब्रूते तौतातितपदानुग ।
तथा सत्यक्षगम्य स्याद धर्मो नो वेदगोचर ॥२१९॥
क्रियाया क्षणभगित्वान्न तस्याश्च फल भवेत् ।
अत सोमादिकर्म्मभ्यो जात शब्दैकगोचर ॥२२०॥
आत्मनिष्ठ फलोत्पादि कर्तृ तत्कालवर्त्ति च ।
अपूर्व्व यत्तदेव स्याद् धर्माधमवच पदम ॥२२१॥
तौ चान्त्यसुखदु खादिविनाश्यौ वर्णितौ बुध ।
शब्द श्रोत्रकविज्ञेयो जात्याधार स च द्विधा ॥२२२॥
वर्णो ध्वनिश्च तत्राद्य कादिरन्त्य करादिज ।
वर्णसघ पद प्रोक्त नन्वेतदसमञ्जसम् ॥२२३॥
प्रत्येकमभिदध्यु किमर्थ ते सघशोऽथवा ।
नाद्योऽप्रतीतेर्नान्त्योऽपि वर्णाना क्षणिकत्वत ॥२२४॥
सघातानुपपत्तेस्तद् यतोऽथप्रत्ययो भवेत् ।
स शब्द स्फोटसज्ञ स्यादित्यूचे पाणिनिर्मुनि ॥२२५॥

(२१६) १ आत्मन ।
(२१७) १ त्रिभ्योज्य ।
(२१९) १ भाटट ।

नैतदेव यत पूर्व्ववर्णसस्कारसयुत ।
वर्णान्त्यो बोधकस्तस्मान्न युक्ता स्फोटकल्पना ॥२२६॥
विकर्षोत्कषकत्वेनानित्य शब्द सुखादिवत ।
सब-धोऽप्यथशब्दाना ज-य स्याद् द्वित्वशब्दवत ॥२२७॥
सब-धत्वात् तथा वेदवाक्य पुरुषनिर्मितम् ।
वाक्यत्वहेतुतो ह्य कालिदासादिवाक्यवत् ॥२२८॥
ताल्वादिस्थानसभूतशब्दत शब्दसतति ।
जायतेऽत्रान्तिम शब्द श्रौत्रोऽ-यो नित्यमेयक ॥२२९॥
कर्मान्यत्वे सति ज्ञेया सामा-यकाश्रयत्वत ।
शब्दस्य गुणता रूपस्पर्शग-धरसादिवत ॥२३०॥
स त्रेधा भाग सयोग शब्दजत्वविभागत ।
वशादिदलभागोत्थ आद्यो भेर्यादिजोऽपर ॥२३१॥
तृतीयस्तूक्त एवादावित्युक्तो गुणसग्रह ।
अन्तभावस्तु विज्ञेय इच्छादौ करुणादित ॥२३२॥
चतुर्विशतिरेवातो गुणा इति समञ्जसम् ।
अथाभिधीयते कर्म्मनिर्णयसग्रहोऽधुना ॥२३३॥
पदाथरत्नमञ्जूषाग्रन्थे कृष्णविनिर्म्मिते ।
पदार्थो गुणसज्ञोऽय समाप्तोऽतिप्रिय सताम ॥२३४॥

——*——

## तृतीय-कर्माख्यपदार्थवर्णनम् ।

सयोग-भागयो कर्माऽसमवायिनिमित्तकम् ।
मान कम्मणि नास्तीति चेत् पश्य चलतीति धी ॥२३५॥

मान नन्वस्तु योगादिसततिस्तद्धिय पदम् ।
नैतदेतेन सयुक्त विभक्त चात इत्यपि ॥२३६॥

प्रतियोगिनिरूप्यत्वात तयोश्चलन वाग्धियो ।
प्रतियोगिनिरूप्यत्व न कदापि प्रतीयते ॥२३७॥

तथा पिपीलिकायोगभागसततिशालिनि ।
शाके चलनधीनवोदयमासादयत्यलम् ॥२३८॥

तस्मात् कम्म पृथक् सिद्ध तच्च पञ्चविध स्मृतम् ।
उत्क्षेपण तथैवापक्षेपणाकुञ्चने परे ॥२३९॥

प्रसारण गतिश्चेति तेषा लक्षणमीदृशम् ।
ऊध्वदिग्योगहेतु स्यादाद्य चाधोदिशो युजे ॥२४०॥

निमित्तमन्यदृजु नोऽग्रभागानां वियोगके ।
तद्देशैर्मूलदेशैश्च सयोगे दोरको यत ॥२४१॥

कुटिल स्यात् तृतीय तु तद्विरुद्ध प्रसारणम् ।
अव्यवस्थितदिग्देशयोगाद्युत्पादि पञ्चमम् ॥२४२॥

मुशलोत्क्षेपणेच्छाया प्रयत्न स्यात् तत करे ।
यत्नापेक्षात्महस्तस्थयोगादुत्क्षेपण भवेत् ॥२४३॥

(२४१) १ ऋजुनो द्र्यस्याग्रभागाना काशदेशवियोगे विभागे सति, तस्यव द्र य स्याग्रभागाना मूलदशश्च सयोग सति यतो दोरक कुटिल स्यात तदाकुञ्चन कर्म्मेत्यथ ।

तद्यत्नापेक्ष[1]मुशलहस्तयोगादुदेत्यनु ।
मुशलोत्क्षेपणं पूर्वयत्नेच्छोच्छेदने ततः ॥२४४॥
ततोऽपक्षेपणेच्छाया प्रयत्नस्तदपेक्षतः ।
करात्मम[1]ुशलोद्धस्तयोगद्वन्द्वात् समुद्भवेत् ॥२४५॥
अवक्षेपणकद्वन्द्वं युगपन्मुशले करे ।
रज्जोराकर्षणेच्छाया प्रयत्नस्तदपेक्षतः ॥२४६॥
हस्तात्मरज्जुहस्तस्थसंयोगद्वयतः करे ।
रज्जौ चाकुञ्चने स्यातामथ रज्जुप्रसारणे ॥२४७॥
इच्छायत्नस्ततः पाणिकर्माऽतो रज्जुहस्तयोः ।
संयोगो नोदनाख्यः स्यात् ततो रज्जुप्रसारणम् ॥२४८॥
उत्पद्यते जलादौ च विना यत्नादितो जनिः ।
गतेरुत्तरसंयोगाद् विनाशः सर्वकर्मणाम् ॥२४९॥
विनश्यद्द्रव्यनिष्ठस्याश्रयनाशात् इरितः ।
भ्रमपातप्रवेशादि त्वन्तर्भूतं गतौ ध्रुवम् ॥२५०॥
न जात्यन्तरता तेषां जातिसंकरदोषतः ।
कूपादौ वंशपत्रादेर्वंशभ्रमणपातधीः ॥२५१॥
जायते जातिभेदे तु जातिसंकर आपतेत् ।
तस्मात् पञ्चैव कर्माणीत्येतत् सम्यग् व्यवस्थितम् ॥२५२॥
पदार्थरत्नमञ्जूषाग्रन्थे कृष्णविनिर्मिते ।
पदार्थः कर्मसंज्ञोऽयं समाप्तोऽतिप्रियः सताम् ॥२५३॥

— o —

(२४४) १ उत्क्षेपणप्रयत्नापेक्षात् ।

# चतुर्थ-सामान्याख्यपदार्थवर्णनम् ।

अनेकवत्ति नित्य यत तत सामा यमुदाहृतम् ।
अतश्चापोह एव स्यादश्वत्वमिति चे मतम् ॥२५४॥
अन तत्वादनश्वानामग्रहेऽश्वत्वधी कथम ।
न शुक्लेऽश्वे न चाभावे, गृह्यते नाश्वता तथा ॥२५५॥
अश्वधीपरतन्त्रा वाऽनश्वधीस्तदधीनका ।
अश्वधीरिति दुवारमन्यो याश्रयमापतेत ॥२५६॥
नातो बौद्धमतापोहो जातिव्याडिमत वच ।
सादश्य जातिरेष्टव्या जातिमूल हि तद्यत ॥२५७॥
भूयोऽवयवसामा ययोगो जात्यन्तरस्य य ।
तत्सादृश्यमतोऽपोहसादृश्या यदवस्थितम् ॥२५८॥
सामा य तत्र मान चानवत्तप्रत्ययो भवेत ।
पराऽपरभिदा द्वेधा तत्र सत्ता पर मतम् ॥२५९॥
अनुवृत्यकहेतुत्वाद भवेत सामान्यमेव सा ।
प्रमाणग्राह्यतवास्तु सत्ता न प्राक प्रवत्तिता ॥२६०॥
मानस्यासत्त्वमेव स्यात वस्तुनो नाप्यसत्यद ।
प्रवत्तत्ते तथा च स्याद योन्याश्रयता च ते ॥२६१॥
सति मान प्रमाण च सति सत्त्वमितीदृशी ।
अथक्रियापटुत्वेऽपि सत्त्वे दोषोऽयमेव ते ॥२६२॥
द्रव्यत्वादिपर तच्च व्यावत्तेरपि कारणम् ।
अतो विशेषसज्ञामप्यास्कन्दति तदेतयो ॥२६३॥

(२५७) १ पाणिनीयमतम् । (२५८) १ पदार्थान्तरस्य

परतापरते भूय स्वल्पार्थत्वानमते मुने ।
तत्रव जातिर्यस्मिन्न षटक स्याज्जातिबाधकम् ॥२६४॥
व्यक्त्यक्यतुल्यते तद्वदनवस्थितिसकरौ ।
सबन्धशून्यता रूपहानिरित्येष सग्रह ॥२६५॥
जातिर्नाऽऽकाशता व्यक्तेरेकत्वाद् घट कुभते ।
न जाती व्यक्तितुल्यत्वादन्योन्यव्यभिचारिणो ॥२६६॥
एकत्रस्थितिसज्ञस्य सकरस्य प्रसगत ।
दण्डिता-खड्गिते न स्तो जाती नो जातिताऽपि न ॥२६७॥
जाति स्यादनवस्थानाम्न चापि समवायता ।
सबन्धाभावतो नापि समताऽन्त्यविशेषता ॥२६८॥
स्वरूपहानितो जाति षडेते यत्र बाधका ।
तात्पयत समालोच्यमाने सति मनीषिभि ॥२६९॥
न सति, जाति सष्टव्या सा च नित्यैव समता ।
विनाशहेत्वभावादित्येतत् सर्व सुमगलम् ॥२७०॥
पदार्थरत्नमञ्जूषाग्रन्थे कृष्णविनिर्मिते ।
सामान्याख्य पदार्थोऽय समाप्तोऽतिप्रिय सताम् ॥२७१॥

—*—

(२६४) १ कारित्वे ।

## पञ्चम-विशेषाख्यपदार्थवर्णनम् ।

विशेषा हेतवोऽत्य तव्यावृत्तप्रत्ययोदये ।
नि सामान्यविशेषाश्च नित्यद्रव्याश्रयास्तथा ॥२७२॥
उष्ट्रादिभ्यो गवाश्वादौ व्यावृत्तप्रत्ययो यथा ।
गोत्वादिहेतुकस्तद्वत्तुल्याकृतिगुणादिके ॥२७३॥
व्यावृत्तप्रत्ययोऽण्वादौ प्रतिव्यक्ति यतो भवेत् ।
योगिना ते विशेषा स्युन वण्वात्मादिषु स्वत ॥२७४॥
व्यावृत्तधीर्विशेषाणामिव कि नोररीकृता ।
तुल्यजात्यादिभाक्त्वान्न व्यावृत्तप्रत्ययोदय ॥२७५॥
स्वतो द्रव्येषु जात्याविहीनत्वात्तु विशेषधी ।
विशेषेषु स्वतो युक्ताऽत एवान्त्या उदीरिता ॥२७६॥
नित्याश्चाश्रयनाशादेर्नाशि हेतोरभावत ।
इति सिद्धि समाभ्यागाद्विशेषाणा निरूपणम् ॥२७७॥
पदाथरत्नञ्जूषाग्रथे कृष्णविनिर्मिते ।
विशेषाख्य पदार्थोऽय समाप्तोऽतिप्रिय सताम् ॥२७८॥

——*——



## षष्ठ-समवायाख्यपदार्थवर्णनम् ।

सबन्धोऽयुतसिद्धानामिहधीहेतुरीरित ।
समवाय पथक्सिद्धि सप्रोक्ताऽयुतसिद्धिका ॥२७९॥
नित्यानित्याश्रयत्वेन द्वेधा चासौ समीरिता ।
अन्योन्यपरिहारेण पृथगाश्रयतोदिता ॥२८०॥
अनित्यगाऽम्बुघटयोरिव नित्याऽऽश्रयस्थिता ।
पथग् गमनयोग्यत्व स्यादणु स्वान्तयोरिव ॥२८१॥
युतसिद्धिरिय प्रोक्ताऽयुतसिद्धिरतोऽन्यथा ।
एका तन्तुपटारूढा वियद्द्रव्यत्वगाऽपरा ॥२८२॥
इह तन्तुषु शुक्लत्वमितीह प्रत्ययो ध्रुवम् ।
सबन्धपूवको ज्ञेय इहधीत्वाद् यथोदके ॥२८३॥
कजमित्येतदभ्युक्त परिशेषानुमानकम् ।
प्रमाण समवायोऽसौ नाशहेतोरभावत ॥२८४॥
नित्यो लिङ्गाविशेषात स स्यादेकोऽनेकता पुन ।
द्रव्यादिव्यञ्जकाधीना वृत्तिद्रव्यादिपञ्चके ॥२८५॥
नास्याद्रव्यत्वतो योगो नापि स्यात् समवायक ।
अनवस्थासमासत्तेरत स्वेनैव पञ्चसु ॥२८६॥
वृत्तिरिन्द्रियसबन्धाभावा नेन्द्रियगोचर ।
अतो नित्यानुमेय स्यात् समवाय इति स्थितम् ॥२८७॥
पदाथ षडविधो भाव इत्यद कणभुड् मतम् ।
अथाभिदध्महेऽभावपदार्थ सग्रहानुगम् ॥२८८॥
पदाथरत्नमञ्जूषाग्रन्थे कृष्णविनिर्मिते ।
समवाय पदार्थोऽय समाप्तोऽतिप्रिय सताम ॥२८९॥

---

# सप्तम-अभावाख्यपदार्थवर्णनम् ।

पदाथ इतरोऽभावो नेतिधीशब्दगोचर ।
प्रमाण चाभ्यधाय्यस्मिन् स च ज्ञेयश्चतुर्विध ॥२९०॥
प्रध्वस प्रागभावश्चान्यो याभावस्ततीयक ।
अत्यन्ताभावकस्तुर्यो दण्डघाताद् घटादिषु ॥२९१॥
प्रध्वसो जायते नित्य स पटानुदयात्पुन ।
प्रागभावस्त्वज य स्याज्जनकाभावत स च ॥२९२॥
अनित्यो घटजन्मादिनाशकारणसभवात् ।
गोरश्वो न भवेदित्थम यो याभाव उच्यते ॥२९३॥
अनादिनिधनोऽभीष्टोऽत्य ताभावो विशारदै ।
वन्ध्यापुत्रो वियत्पुष्प नरशृड्गमितीदृश ॥२९४॥
पदार्थाविति सप्रोक्तौ भावाभावौ सुविस्तरौ ।
अनयोस्तत्त्वविज्ञाना मोक्ष सजायते नृणाम ॥२९५॥
पदाथरत्नमञ्जूषाग्र थे कृष्णविनिर्मिते।
अभावाख्य पदार्थोऽय समाप्तोऽतिप्रिय सताम ॥२९६॥

—*—

# मोक्षस्वरूपवर्णनम् ।

ननु को नाम मोक्षोऽय शुद्धधीसततेज्जनिम ।
केचिदाहु परे तस्या अपि च्छेद परे पुन ॥२९७॥
सततोध्वगति प्राहु पु प्रकृत्योर्विवेचनात् ।
औदासीय पर पुस ऊचु कपिलसेविन ॥२९८॥
परिणामविहीनात्मावस्थान क्लेशसक्षये ।
नित्यानन्दगुणव्यक्ति मीमासाकुशला विदु ॥२९९॥
ब्रह्माशकस्य जीवस्योपाधिनाशेऽशिरूपताम् ।
केचिद् भवप्रवाहैकबीजाज्ञाननिवत्तनम ॥३००॥
नित्यात्मरूपानन्दाभिव्यक्ति वेदा तिनो विदु ।
नैषामेकतमोऽप्यत्र पक्ष फाटसमथन ॥३०१॥
विषयोपप्लाभावे ज्ञानानुदयतोऽग्रिम ।
न युक्तोऽपुरुषाथत्वादितरोऽपि न शोभन ॥३०२॥
स्वोच्छेदार्थी यतो नैव कश्चिदप्यस्ति बुद्धिमान ।
परिच्छिन्नत्वतोऽनित्य स्यादात्मा च ततीयके ॥३०३॥
चतुर्थे मोक्षहेतूनामनुष्ठन न सभवेत् ।
उदासीनत्वत पुस प्रकृतेश्च जडत्वत ॥३०४॥
नित्यानन्दगुणास्तित्वे मानाभावान पञ्चम ।
षष्ठेंऽशाशित्वतो ब्रह्मानित्यमेव प्रसज्यते ॥३०५॥
सप्तमे ज्ञानहानिन सती द्वैतप्रसक्तित ।
नासती ज्ञानवयर्थ्यान्निह्यासज्जन्यते क्वचित् ॥३०६॥

(२९७) १ बौद्धा ।
(२९८) १ साख्या ।
(३०१) १ अनायासकृत 'फाट' मित्युच्यत ।

विरोधात्सदसत्त्वं न नाप्यनिर्वचनीयता ।
अनिर्वाच्यनिवर्त्तित्वान्नापि स्यात्पञ्चमी विधा ॥३०७॥
मानाभावादथात्मैव निवृत्तिरिति चेन्न तत् ।
तस्य नित्यत्वतो ज्ञानवयर्थ्यस्य प्रसंगतः ॥३०८॥
सुखस्यानुभवोऽभीष्टः पुरुषार्थः सुखं न तु ।
सुखं च दुःखयोग्ये च तस्मान्नादः समञ्जसम् ॥३०९॥
अतो विवेकिनः पुंसो विषये दोषदर्शनात् ।
विरक्तस्य निषिद्धादित्यागे नित्यादिसेवनात् ॥३१०॥
निवर्त्तकस्य धर्मस्योदयनेन समुच्चितात् ।
ज्ञानाच्छरीरबुध्यादिनवात्मगुणसंक्षये ॥३११॥
दग्धे धनाग्निवत् पुंसोऽवस्थानं मोक्ष उत्तमः ।
अत्यन्तोच्छेदिनी दुःखसंततिः संततित्वतः ॥३१२॥
दीपसंततिवन्मानमेतन्मोक्षे समीरितम् ।
अशरीरं वा वसंतं न प्रियेत्यागमस्तथा ॥३१३॥
तस्मिन्मानं न सिद्धेऽर्थे वचसो मानतेष्यते ।
कार्यान्वितार्थवाचित्वात् पदानामिति चेन्न तत् ॥३१४॥
कार्यशब्देष्वनैकान्त्यान्नहि कार्यपदं वदेत् ।
कार्यान्तरान्वितं स्वार्थं कार्यद्वितयहानितः ॥३१५॥
एकवाक्येन चाप्यस्यान्वितमात्राभिधायिता ।
गौरवात् स्वार्थमेवातोऽभिदध्यादखिलं पदम् ॥३१६॥
आकाङ्क्षादित्रयोपेताः पदार्थाः प्रतिपादकाः ।
वाक्यार्थस्येति सिद्धेयं मोक्षे शब्दस्य मानता ॥३१७॥

*

तस्मादकस्मान्नरपञ्चवक्त्रपादाम्बुजद्वन्द्वसमाधिभाजाम् ।
वैराग्यविज्ञानसमृद्धधर्मजुषां भवेद् दुःखनिवृत्तिरग्र्या ॥३१८॥

———*———

विद्यागर्वाद्रिरूढातिचपलरसनाग्रोग्रचित्तान्तराल-
प्रोद्यत्पाषण्डदण्डार्दितजनचयदुर्वादिपञ्चाननेन ।
मञ्जूषा षट्पदार्थाऽमलमणिगणसंराजिता निर्मितेयं
कृष्णेनागव्वविद्वज्जनचरणयुगाम्भोजसेवारतेन ॥३१९॥
पदार्थरत्नमञ्जूषाग्रन्थे कृष्णविनिर्मिते ।
निर्दोषो मोक्षवादोऽयं समाप्तोऽतिप्रियः सताम् ॥३२०॥

॥ इति श्रीमहाराष्ट्रवंश्यश्रीकृष्णभट्टविरचिता पदार्थरत्नमञ्जूषा समाप्ता ॥

निःशेषक्षितिपालमौलिविलसद्भास्वन्मणिश्रेणिसद्
दीपोद्दीपितपादपद्मयुगलः श्रीरेणुकासेविनि ।
पृथ्वीं शासति शार्ङ्गधारितनुसंभूतेऽर्ज्जुने राजनि
ग्रन्थोऽयं समकारि कृष्णकृतिना श्रीरेणुकाप्रीतये ॥३२१॥

॥ श्रीरस्तु शुभं भवतु ॥

# परिशिष्टम्

पदाथरत्नमञ्जूषाया परत्वविनाशकारणानामभिधानमात्रमेव येन क्रमेणोक्त तेन प्रकारेणायमङ्कव्यवहार ।

## (१) अनेन प्रकारेण द्रव्यविनाशादेव विनाश ।

| | | | |
|---|---|---|---|
| पडावयव कम | —१ | | |
| अवयवातर विभाग | —२ | अपक्षाग्रद्धि | —१ |
| पिडारभक सयोगनाग | —३ | परत्वस्यात्पत्ति | —२ |
| पिंडविनाश | —४ | सामा यनद्धग्त्पत्ति | —३ |
| तन्निष्ठपरविनाश | —५ | | |

## (२) अनेनप्रकारेण सयोगविनाशादेव परत्वस्य विनाश ।

| | | | |
|---|---|---|---|
| परत्वाधार पिड कम | —१ | अपेक्षाबद्धि | —१ |
| दिक पिडविभाग | —२ | परत्वम्यात्पत्ति | —२ |
| दिक पिंड सयाग विनाश | —३ | सामा यबुद्धेरत्पत्ति | —३ |
| परत्वस्य विनाश | —४ | | |

## (३) अनेन प्रकारेण निमित्तविनाशादेव परत्वस्य विनाश ।

| | | | | | |
|---|---|---|---|---|---|
| अपक्षाबुद्धि | —१ | गणबद्धरुत्पद्यमानता | —३ | अपक्षाबद्धविनश्यता | —३ |
| परत्वस्योत्पत्ति | —२ | गणस्य विनश्यता | —४ | गणबद्धेरुत्पत्ति | —४ |
| सामा यबद्धरत्पत्ति | —३ | द्र यबद्धरुत्पत्ति | —५ | द्र यबुद्धेरुत्पद्यमानता | —५ |
| अपक्षाबद्धविनाश | —४ | | | | |
| ततश्च परत्वगणविनाश | —५ | | | | |

## (४) एतत्प्रकारेण समवायिकारणनिमित्तकारणासमवायिकारणाना युगपन्नाशात परत्वस्य विनाश ।

| | | | | |
|---|---|---|---|---|
| पिंडावयव कम्म | —१ | अपेक्षाबद्धि | —१ | पिंडे कम । |
| अवयवातर विभाग | —२ | परत्वस्यात्पत्ति | —२ | दिक्पिडविभा । |
| पिंडारभकस ोगनाश | —३ | सामा यबद्धरत्पत्ति | —३ | दिक्पिडसयोगविनाश । |
| पिंडविनाश | —४ | अपक्षाबद्धविनाश | —४ | परत्वस्य विनाश । |
| पिंडनिष्ठपरत्वविनाश | —५ | ततश्च परत्वम्यविनाश | —५ | |

## (५) एव द्रव्यापेक्षाबुद्धयोर्युगपद्विनाशात परत्वस्य विनाश ।

| | | |
|---|---|---|
| पिंडावयव कम | —१ | अपेक्षा बद्धि । |
| अवयवातर विभाग | —२ | परत्वस्य योत्पत्ति । |
| पिंडारभकसयागनाश | —३ | सामा यब द्धरुत्पत्ति । |
| पिंडविनाश | —४ | अपक्षाबुद्धविनाश । |
| पिंडनिष्ठपरत्वविनाश | —५ | ततश्च परत्वनाश । |

(६) अनेन प्रकारेण द्रव्यसयोगयोनाशात् युगपत परत्वगुणस्य विनाश इति ।

| | | | | | |
|---|---|---|---|---|---|
| परत्वाधारावयव कम | —१ | पिंडकम | —१ | अपेक्षाबुद्धि | —१ |
| अवयवातगाद्विभाग | —२ | दिक् पिंड विभाग | —२ | परत्वस्य योत्पत्ति | —२ |
| पिंडारभक सयोगनाश | —३ | दिक् पिंड सयोगनाश | —३ | सामान्यबद्धेरुत्पत्ति | —३ |
| पिंडविनाश | —४ | परत्वविनाश | —४ | अपक्षाबद्धविनाश | —४ |
| पिंडनिष्ठपरत्वविनाश | —५ | | | | |

(७) अनेन प्रकारेणापेक्षाबुद्धिसयोगयो युगपद्विनाशात् परत्वस्य विनाश इति ज्ञेयम् ।

| | | | |
|---|---|---|---|
| अपक्षाबद्धि | —१ | परवाधार कर्मोपरि (प ?) द्यते | —१ |
| परत्वस्य चोत्पत्ति | —२ | दिक् पिंड विभाग | —२ |
| सामान्यबद्धरुत्पत्ति | —३ | दिक पिंडसयोगविनाश | —३ |
| अपक्षाबद्धविनाश | —४ | परत्वस्य विनाश | —४ |
| (ततश्च परत्व) विनाश | —५ | | |

॥ इति शुभम् ॥

॥ श्री ॥

## पदार्थरत्नमञ्जूषाया श्लोकानुक्रमणिका

# राजस्थान पुरातन ग्रन्थ माला

प्रधान सम्पादक—पद्मश्री मुनि जिनविजय, पुरातत्त्वाचार्य

+++++++++

## प्रकाशित ग्रन्थ

### संस्कृत, प्राकृत, अपभ्रंश

१ प्रमाणमंजरी, तार्किकचूडामणि सर्वदेवाचार्यकृत सम्पादक – मीमांसा न्यायकेसरी प० पट्टाभिरामशास्त्री विद्यासागर। मूल्य—६ ००

२ यन्त्रराजरचना, महाराजा सवाईजयसिंह कारित। सम्पादक—स्व प० केदारनाथ ज्योतिर्विद जयपुर। मूल्य—१ ७५

३ महर्षिकुलवैभवम् स्व० प० मधुसूदनओझा प्रणीत भाग १, सम्पादक—म म० प० गिरिधरशर्मा चतुर्वेदी। मूल्य—१० ७५

४ महर्षिकुलवैभवम्, स्व पं० मधुसूदन ओझा प्रणीत भाग मूलमात्रम् सम्पादक—प० श्रीप्रद्युम्न ओझा। मूल्य—४ ००

५ तर्कसंग्रह अन्नंभट्टकृत सम्पादक—डॉ जितेन्द्र जेटली एम ए पी-एच डी मूल्य—३ ००

६ कारकसंबधोद्योत प रभसनन्दीकृत सम्पादक—डा हरिप्रसाद शास्त्री एम ए, पी एच डी। मूल्य—१ ७५

७ वृत्तिदीपिका, मौनिकृष्णभट्टकृत सम्पादक—स्व प पुरुषोत्तमशर्मा चतुर्वेदी साहित्याचार्य। मूल्य—२ ०

८ शब्दरत्नप्रदीप, अज्ञातकर्तृक सम्पादक—डा हरिप्रसाद शास्त्री एम ए, पी एच डी। मूल्य—२ ०

९ कृष्णगीति, कवि सोमनाथविरचित, सम्पादिका—डा प्रियबाला शाह एम ए पी एच डी डी लिट। मूल्य—१ ७५

१० नृत्तसंग्रह, अज्ञातकर्तृक सम्पादिका—डा प्रियबाला शाह, एम ए पी एच डी, डी लिट। मूल्य—१ ७५

११ शृङ्गारहारावली श्रीहर्षकवि रचित, सम्पादिका—डॉ प्रियबाला शाह एम ए पी एच डी डी लिट। मूल्य—२ ७५

१२ राजविनोदमहाकाव्य महाकवि उदयराजप्रणीत, सम्पादक—प० श्रीगोपालनारायण बहुरा, एम ए, उपसञ्चालक, राजस्थान प्राच्यविद्या प्रतिष्ठान जोधपुर। मूल्य—२ २५

१३ चक्रपाणिविजय महाकाव्य, भट्टलक्ष्मीधरविरचित, सम्पादक—प० श्रीकेशवराम काशीराम शास्त्री। मूल्य—३ ५०

१४ नृत्यरत्नकोश (प्रथम भाग) महाराणा कुम्भकर्णकृत सम्पादक—प्रो रसिकलाल छोटालाल पारिख तथा डा प्रियबाला शाह एम ए, पी एच डी, डी लिट। मूल्य—३ ७५

१५ उक्तिरत्नाकर, साधसुन्दरगणिविरचित सम्पादक—पद्मश्री मुनि श्रीजिनविजयजी, पुरातत्त्वाचार्य सम्मान्य सचालक राजस्थान प्राच्यविद्या प्रतिष्ठान, जोधपुर। मूल्य—४ ७५

१६ दुर्गापुष्पाञ्जलि, म म० प० दुर्गाप्रसादद्विवेदिकृत, सम्पादक—प० श्रीगङ्गाधर द्विवेदी साहित्याचार्य। मूल्य—४ २५

१७ कर्णकुतूहल, महाकवि भोलानाथविरचित, इन्हीं कविवर की अपर संस्कृत कृति श्रीकृष्णलीलामृत सहित सम्पादक—प० श्रीगोपालनारायण बहुरा एम ए, मूल्य—१ ५

१८ ईश्वरविलासमहाकाव्य, कविकलानिधि श्रीकृष्णभट्टविरचित, सम्पादक—भट्ट श्रीमथुरानाथशास्त्री साहित्याचार्य, जयपुर। स्व पी के गोड द्वारा अंग्रेजी में प्रस्तावना सहित। मूल्य—११ ५०

१९ रसदीर्घिका कविविद्यारामप्रणीत, सम्पादक—प० श्रीगोपालनारायण बहुरा, एम ए मूल्य—२ ००

२० पद्यमुक्तावली कविकलानिधि श्रीकृष्णभट्टविरचित सम्पादक—भट्ट श्रीमथुरानाथ शास्त्री, साहित्याचार्य। मूल्य—४ ००

२१ काव्यप्रकाशसकेत भाग १ भट्टसोमेश्वरकृत सम्पा –श्रीरसिकलाल छो० पारीख अग्रजी मे विस्तत प्रस्तावना एव परिशिष्ट सहित मूल्य-१२ ०

२२ काव्यप्रकाशसकेत भाग २ भट्टसोमेश्वरकृत सम्पा –श्रीरसिकलाल छो० पारीख, मूल्य–८ २

२३ वस्तुरत्नकाष अज्ञातकत क सम्पा०–डा प्रियबाला शाह। मूल्य–४ ०

२४ दशकण्ठवधम प० दुर्गाप्रसादद्विवदिकृत, सम्पा०–प० श्रीगङ्गाधर द्विवदी। मूल्य–४ ०

२५ श्री भुवनश्वरीमहास्तोत्र, सभाष्य पथ्वीधराचायविरचित कवि पदमनाभकृत भाष सहित पूजापञ्चाङ्गादिसवलित। सम्पा०–प श्रीगोपालनारायण बहुरा। मूल्य–३ ५

२६ रत्नपरीक्षादि सप्त ग्र थ सग्रह ठक्कुर फरू विरचित, सशोधक–पद्मश्री मुनि जि विजय पुरातत्त्वाचाय। मूल्य–६

२७ स्वयभूछ द महाकवि स्वयभूकृत, सम्पा० प्रो० एच डी वेलणकर। विस्तत भूमि (अग्रजी मे) एव परिशिष्टादि सहित मूल्य–७ ५

२८ वत्तजातिसमुच्चय कवि विरहाङ्करचित, ,, , मूल्य–५

२९ कविदपण अज्ञातकत क, , , मूल्य–६

३० कर्णामतप्रपा भट्ट सोमेश्वर कृत सम्पा –पद्मश्री मुनि जिनविजय। मूल्य–२

३१ त्रिपुराभारती लघुस्तव लघुपण्डित विरचित सम्पा० , मूल्य–३

३२ पदाथरत्नमञ्जूषा प० कृष्ण मिश्र विरचित सम्पा० मूल्य–३ ०



# प्रेसो मे छप रहे ग्रंथ

## सस्कत प्राकृत

१ शकुनप्रदीप लावण्यशमरचित सम्पा०–पद्मश्री मुनि श्रीजिनविजय।

२ बालशिक्षाव्याकरण ठक्कुर सग्रामसिंहरचित, सम्पा०–पद्मश्री मुनि श्रीजिनविजय।

३ न दोपाख्यान, अज्ञातकत क सम्पा –डा० बी जे साडसरा।

४ चा द्रव्याकरण आचाय च द्रगोमिविरचित, सम्पा०–श्री बी डी दोशी।

५ प्राकृताान द रघुनाथकवि रचित सम्पा०–पद्मश्री मुनि श्रीजिनविजय।

६ कविकौस्तुभ प रघुनाथरचित, सम्पा०–श्री एम एन गोरे।

७ एकाक्षर नाममाला—सम्पा०–मुनि श्री रमणिकविजय।

८ नत्यरत्नकोश भाग २, महाराणा कुभकणप्रणीत सम्पा०–श्री आर सी पारिख डा प्रियबाला शाह।

१० इ द्रप्रस्थप्रब ध, सम्पा०–डा दशरथ शर्मा।

११ हमीरमहाका यम, नयच द्रसूरिकृत, सम्पा०–पद्मश्री मुनि श्रीजिनविजय।

१२ वासवदत्ता, सब धकृत, सम्पा०–डा० जयदेव मोहनलाल शुक्ल।

१३ वत्तमुक्तावली कविकलानिधि श्रीकृष्ण भट्ट कृत, स० प० भट्ट श्री मथुरानाथ शास्त्री

१४ आगमरहस्य, स्व प० सरयूप्रसादजी द्विवेदी कृत, सम्पा०–प्रो० गङ्गाधर द्विवदी।

